शारदा-संस्कृत-ग्रन्थमालाया दशमम्प्रसूनम् ।





# महाकवि-माघः

सम्पादकः—

गौरीनाथ-पाठकः ।

# अभ्यर्थना

अयि श्रद्धेयाः सहृदयाः !

न खलु न विदितं तत्रभवताम्भवतां यत्संस्कृत-साहित्य-संसृतौ पञ्चमहाकाव्यप्रणयनप्रणयिषु आबालवृद्धप्रसिद्धः माघोऽपि भारत-भूमेरेकमेव गौरवम् ।

अद्यत्वे यद्यपि संस्कृतवाङ्मयस्यास्य प्रागिव प्रभुत्वं नावलोक्यते तथापि यथा दिग्विदिग्व्यापित्वमस्य दृश्यते न तथान्यस्य कस्यापि वाङ्मयस्य ।

संस्कृतवाङ्मयस्य कियान् कीदृशः प्रचार-प्रकर्षः, कुत्र कुत्र चेदं व्यवह्रियते, अत्र च कस्मिन् विषये कैः कति ग्रन्था नः पूर्वजैर्निरमायिषत, तेषु च साम्प्रतं भारतस्य कस्मिन् कोणे कस्मिन् ग्रामे कति-पुस्तकानि लब्धुं शक्यत इति सप्रयत्नं शतं वत्सराण्यतीत्यापि सिद्धान्ततयाधिगन्तुं नैव पार्यते ।

सुदूरमेवास्तां तावदियत्तया, ईदृक्तया वा निर्धारणमस्य । वयं निजपूर्वजानामितिवृत्तमपि न जानीम इति कियल्लज्जाकरमस्माकम् ।

अस्माकं महाकवयः के, कदा, कुत्र प्रादुरभूवन्, क एषां देशः, कं वा सान्वयमन्ववायं स्वजनुषा पावितमेभिः, के च बान्धवाः, का वा राजसभा स्वप्रतिभावैभवेनालंविभूषितेत्यादिष्वपि नो विज्ञानं सुदूरं पराहतम् ।

एतदविकलमधिगन्तुं पुरातत्त्वविज्ञानव्यसनिभिर्भारतीयैर्विपश्चिद्भिः, बद्धपरिकरैः पाश्चात्यैश्च नैकवारं बहु प्रायत्यत । परमद्यावधि न कैश्चिदपि सिद्धान्त आसाद्यत । सर्वेषामेव विदुषामत्र परस्परं विसंवादिन्य उक्तयः दरीदृश्यन्ते ।

एतदेव सर्वं सम्यगालोच्य विबुध-मण्डली-मण्डनायमानानां, साहित्यार्णवकर्णधाराणां श्रद्धेयपादानां महामहोपाध्यायानां श्रीरामशास्त्रिमहोदयानां तथा समाराध्यचरणकमलानां प्रत्नतत्त्वान्वेषणविचक्षणधुरीणानां सरस्वतीविभूतीनां तत्रभवतां श्रीमतां रामावतारशर्ममहाशयानाञ्च चरणयुगलं ध्यायं ध्यायं मयाऽस्यां ग्रन्थमालायां पुरातत्वविभागे प्रथममिदं कुसुमं समासज्यतेति पुरातत्त्वगवेषणपरा महात्मानः प्रथमावतरणेऽस्मिन्नवश्यम्भाविनं स्खलनमन्यथाकृत्य साधु विवेचयिष्यन्ति प्रतिबोधयिष्यन्ति च मास्मभविष्यति संशोधनायेति सादरमभ्यर्थना—

गौरीनाथ शर्म्मणः ।

# निवेदनम्

——o——

विदितमेव प्रायः सर्वेषां विदुषां यत्पुरातना महाकवयः स्वीयमितिवृत्तं स्वकीये निबन्धे न कुत्रचन सूचयाञ्चक्रुरिति । उचितमेवैतत् यतः—

" परैः प्रोक्तो गुणः प्रायो निर्गुणोऽपि गुणीभवेत् ।
इन्द्रोऽपि लघुतां याति स्वयं प्रख्यापितैर्गुणैः ॥ "

अतो भुवनमान्यानां महाकवीनां जन्मसमय-जन्मभूमिप्रभृति वृत्तान्तज्ञापनं गुणज्ञैरेव कैश्चिदाधुनिकैः कविभिः कुत्रचित्कृतं भवेत् । तथाप्यस्माकं संस्कृतसमयस्य ह्रासप्रायत्वात् माघप्रभृतीनामपि महाकवीनामितिहासविषयेऽपरिचायकत्वमतीव लज्जाकरम् ।

यद्यपि कवेरितिवृत्तबोधेन न काव्यस्य इतवृत्तज्ञाने कोऽप्युपकार इति केषाञ्चिद्विदुषां विचारः समुल्लसति, तथापि कवेः देशकालज्ञानेन सामयिकता, दैशिकता, ज्ञाता सती करोत्येवोपकारं काव्यार्थज्ञाने इति न कस्यापि सहृदयस्याविदितम् ।

अत एवास्माकं परमसुहृद्भिर्गौरीनाथशर्मभिः सप्रयासं सङ्कलितो महाकवि-माघविषयेऽयम्प्रबन्धः सर्वथा महान्तमुपकारमाधास्यति संस्कृत-साहित्यसेवाजुषामिति मे मनीषा ।

नात्र किमपि वक्तव्यं गुणग्रहणैकप्रवणा पाठका एव पर्यालोच्यैनमनुगृहीष्यन्तीति ।

**श्रीतारादत्त पन्तस्य**
( रणवीर-पाठशाला-हिन्दू विश्वविद्यालय )
काशी ।

# महाकविर्माघः ।



जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।
नास्ति येषां यशःकाये जरामरणजं भयम् ॥ १ ॥

भर्तृहरिः ।

प्रायः सर्व एव भारती-भूति-भासित-स्वान्ता गीर्वाण-वाणी-प्रणय-प्रवणा विद्वन्मणयस्तत्वविदो विपश्चितो जानन्ति यत् संस्कृत-साहित्य-संसदि पञ्चमहाकाव्येषु शिशुपालवधाभिधानेनापि महाकाव्येनानुपममासनमासाद्यत इति ।

इदानीन्तनान्तेवासिनश्च ग्रन्थानविकलमामूलमधीत्याऽपि तत्तत्कवि-कृति-रहस्येतिहास-समय-निर्णयादिकमवगन्तुं कथमपि नो प्रभवन्तीति नाविदितं विदितवेदितव्यानां काव्यपरिषदमलङ्कुर्वतां तत्रभवताम्भवतामिति तामेवावश्यमुपनिबन्धनीयामद्यतनीं सरणिमनुसृत्य किञ्चिन्निवेद्यते ।

## महा-कवि-माघ—

विषये, कोऽयं महापुरुषः ? कां वा वसुमतीमसुमतीमकरोत् ? कतमद्वा कुलमनेन स्वजन्मनालमलङ्कृतम् ? कस्य वावनीनायकस्य संसदनेन स्वप्रतिभाप्रभाभिरलम्प्राकाश्यत ? ऐतिहासिकः कश्चित्प्रबन्धोऽपीहासद्यते नवा ? कदा वायमिममिलामण्डलं मण्डयामास ? कथं वास्य प्रवृत्तिरस्यां महाकाव्यरचनायाम् ? कथञ्च व्यावहारिकं विज्ञानं ? इयञ्च कृतिः कस्यचित्तुलामधिरोहति नवा ? शास्त्रान्तरेषु पाण्डित्यं कियत् कीदृशञ्चासीत्, कीदृशश्चास्यादर्शः ? कीदृशी च काव्यप्रणयनप्रणालिः ? कं वाऽवलम्ब्य प्रणीतमेतन्महाकाव्यम्, केवामुष्य कृतौ गुणाः के च दोषाः ? अन्याऽपि काचिदस्ति नवा कृतिप्रवृत्तिरित्यादिषु विषयेषु शिशुपालवधमनुदिनमधीयानानां सुकुमारकुमार-मतीनां कुमाराणां सुधियाञ्च स्वान्तं नितान्तमहरहः कौतूहलमवलम्बत एवेति मन्यामहे ।

यद्यपि माघीयमेतदशेषमितिवृत्तमधिगन्तुं बद्धपरिकरैरन्वेषणपरैरनल्पैः प्रत्नतत्त्वकोविदैर्बहुशः प्रयतमानैरपि दैशिकैर्वैदेशिकैश्च नाद्यावधि कश्चन सिद्धान्त आसाद्यत तथापि

"अथवा कृतवाग्द्वारे वंशेऽस्मिन् पूर्वसूरिभिः ।
मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ॥"

इति कालिदासीयमपद्यं स्मारं स्मारं महतायासेन किञ्चिल्लब्धानुसन्धानेन मया स्वीयङ्गवेषणाविषयं विषयीक्रियते विविध-विध-काव्य-पारावार-पारीणानां समालोचनचतुराणां रसिकधुरन्धराणां सहृदयाणां पुरतः ।

कोऽयं महापुरुषः कतमो देशः

अयं महामहिमशाली, दिग्विदिग्विदितकीर्तिमाली, कविकामदुघायाः विज्ञप्रसविन्याः भारतभूमेर्भूतिभूतो महाकविमाघः गुर्जरप्रान्तान्तर्गतश्रीमालप्रदेशवास्तव्य आसीत्।

कतमद्वा कुलमनेन स्वजन्मनालमलङ्कृतम्

अस्य च पितामहः सुप्रभदेवः, पिता दत्तकः, माता ब्राह्मी, पितृव्यश्च शुभङ्कर इत्याख्यः समभूत् । अस्य कुलमपि अनस्तमितोदकं धनदोपमं कमलालयाया अपरमिव विलासस्थानमभूत् ।

अस्य प्रादुर्भावानन्तरं जनको दत्तकः साल्हादं जातकर्मादि संस्कारं यथाविधि समनुष्ठायास्य जन्मपत्रनिर्मिमित्सया भारतीय-नानादिगन्तवास्तव्यान् त्रिकालज्ञान् ज्योतिष्पारदृश्वनो मौहूर्तिकाग्रेसरान् सादरं सबहुमानञ्च न्यमन्त्रयत् ।

तेच साल्हादमतिप्रयासेन पत्रिकां निर्माय, ग्रहाणामुच्चावचं वलाबलञ्च सम्यङ्निर्णीय, सवैलक्ष्यमिदवोचनः—

" हे विद्वन् ! भवदीयोऽयम्बालः सुचिरं श्रैमत्कमैश्वर्य्यमनुभूयानुभूय जीवनस्यान्तिमे वयसि जराजर्जरितकलेवरः सद्वैद्येनापि अचिकित्स्यामयो महतीन्दुःखपरम्परामनुभवन्दारिद्र्याभिभूतः स्वर्गपथपथिको भवितेति । "

दत्तकोऽपि, तमेव बालम् " अयमेव मे वंशप्रवर्तयितेति " निश्चिन्वानः, आपदर्थं धनं रक्षेदिति नीतिवचनं स्मारं स्मारमापदि माघस्य कृते सुदृढमञ्जूषादिभाण्डानि नानाविध-बहुमूल्य-हीरक-मुक्ता-मणि-वैडूर्यरत्नादिभिः पूरयित्वा एकस्मिन् अन्तःपुरीयप्रासादे भूमिं खनित्वा अस्थापयत् ।

एवं प्रवहति कालचक्रे दत्तकश्च आयुःपूर्णतया पुरन्दरपुरातिथिरभवत् ।

असौ कस्य राज्ञः सभासदासीदित्यत्र पारम्पर्येणैवमनुश्रूयते यद्नेन सर्वदा भुवं भ्रमता कुत्रचिदपि चिरमेकत्र नास्थीयत । अत एव तेन कस्यापि राज्ञः संसच्चिरमलङ्कर्तुं नाशक्यत । अतोऽन्यैरिव मयापीह मौनमेवावलम्ब्यते ।

कस्य वावनीनायकस्य संसत्स्वप्रतिभाप्रभाभिरलम्प्राकाश्यत ।

चतुस्त्रिंशदधिकत्रयोदशशतमिते विक्रमाब्दे चन्द्रप्रभसूरिविरचिते "एतत्सम्बन्धिनः प्रभावकचरितेऽयम्प्रवन्धो दृश्यतेः—प्रबन्धाश्च के ?"

"श्रीसिद्धर्षिः श्रियो देयाद्धियामध्यानधामभूः ।
निर्ग्रन्थग्रंथतामापुर्यद्ग्रन्थाः सांप्रतं भुवि ॥ १ ॥
श्रीसिद्धर्षिप्रभोः पांतु वाचः परिपचेलिमाः ।
अनाद्यविद्यासंस्कारा यदुपास्ते भिदेलिमाः ॥ २ ॥
सुप्रभुः पूर्वजो यस्य सुप्रभः प्रतिभावनाम् ।
बन्धुर्बन्धुरभाग्यश्रीर्यस्य माघः कवीश्वरः ॥ ३ ॥
चरितं कीर्त्तयिष्यामि तस्य त्रस्यज्जडाशयम् ।
भूभृच्चक्रचमत्कारि वारिताखिलकल्मषम् ॥ ४ ॥
अजर्जरश्रियां धाम वेषालद्व्यजरज्जरः ।
अस्ति गुर्जरदेशोऽन्यसज्जराजन्यदुर्जरः ॥ ५ ॥
तत्र श्रीमालमित्यस्ति पुरं मुखमिव क्षितेः ।
चैत्योपरिस्थकुंभालिर्यत्र चूडामणीयते ॥ ६ ॥
प्रासादा यत्र दृश्यन्ते मत्तवारणराजिताः ।
राजमार्गाश्च शोभंते मत्तवारणराजिताः ॥ ७ ॥
जैनालयाश्च सन्त्यत्र नवंधूपगमं श्रिताः ।
महर्षयश्च निःसंगानवंधूपगमं श्रिताः ॥ ८ ॥
तत्रास्ति हास्तिका स्वीयापहस्तितरिपुव्रजः ।
नृपः श्री वर्मलाताख्यः शत्रुमर्मभिदाक्षमः ॥ ९ ॥

तस्य सुप्रभदेवोऽस्ति मंत्री मित्रं जगत्यपि ।
सर्वव्यापारमुद्राभृन्मुद्राकृद्दुर्जनानने ॥ १० ॥
देवार्येशनसौर्यस्य नीतिरीतिमुदीक्ष्य तौ ।
अवलंब्य स्थितौ विष्णुपदं कर्तुं तपःकिल ॥ ११ ॥
तस्य पुत्रावुभावंसाविव विश्वभरक्षमौ ।
आद्यो दत्तः स्फुरद्वृतो द्वितीयश्च शुभंकरः ॥ १२ ॥
दत्तवित्तोनुजीविभ्यो दत्तचित्तसुधर्मधीः ।
अप्रवृत्तः कुकृत्येषु तत्र सुत्रामवत् श्रिया ॥ १३ ॥
हर्म्यकोटिस्फुरत्कोटिध्वजजालान्तरस्थिताः ।
जलजन्मतयेव श्रीर्यस्मादासीदनिर्गमा ॥ १४ ॥
तस्य श्रीभोजभूपालवाल[१] मित्रं कृतीश्वरः ।
श्रीमाघो नंदनो ब्राह्मीस्यंदनः शीलचन्दनः ॥ १५ ॥
ऐदंयुगीनलोकस्य सारसारस्वतायितम् ।
शिशुपालवधः काव्यं प्रशस्तिर्यस्य शाश्वती ॥ १६ ॥
श्रीमाघोस्ताघधीः श्लाघ्यः प्रशस्यः कस्य नाभवत् ।
चित्तजाडयहरा यस्य काव्यगंगोर्मिविप्रुषः ॥ १७ ॥
तथा शुभंकरश्रेष्ठी विश्वविश्वप्रियंकरः ।
यस्य दानाद्भुतैर्गीतैर्हर्यश्वो हर्षभूरभूत् ॥ १८ ॥
तस्याभूद्गेहिनी लक्ष्मीर्लक्ष्मीर्लक्ष्मीपतेरिव ।
यया सत्यापिताः सत्यः सीताद्या विश्वविश्रुताः ॥१९॥
नंदनो नंदनोत्तंसः कल्पद्रुम इवामरः ।
यथेच्छादानतोऽर्थिभ्यः प्रथितः सिद्धनामतः ॥ २० ॥
अनुरूपकुलां कन्यां धन्यां पित्रा विवाहितः ।
भुंक्ते वैषयिकं सौख्यं दोगुंदग इवामरः ॥ २१ ॥
दुरोदरभरोदारो दाराचारपराङ्मुखः ।
अन्यदासोऽभवत्कर्म दुर्जयं विदुषामपि ॥ २२ ॥

पितृमातृगुरुस्निग्धबन्धुमित्रैर्निवारितः ।
अपि नैव न्यवर्त्तिष्ट दुर्वारं व्यसनं यतः ॥ २३ ॥

अगूढातिप्ररूढेऽस्मिन्नहर्न्निशमसौऽवशः ।
तदेकचित्तधूर्त्तानां सदाचारादभूद्बहिः ॥ २४ ॥

सपिपासोशनायाति शीतोष्माच्च विमर्शतः ।
योगीव लीनचित्तोऽत्र व्यत्रस्यत्साधुवाक्यतः ॥२५॥

निशीथातिक्रमे रात्रावपि स्वकगृहागमी ।
वध्वा प्रतीक्ष्य एकस्यास्तया नित्यं प्रतीक्ष्यते ॥२६॥

अन्यदा रात्रिजागर्यानिर्यातवपुरुद्यमाम् ।
गृहव्यापारकृत्येषु विलीनांगस्थितिं ततः ॥ २७ ॥

ईदृक् ज्ञातेयसम्बन्धवशकर्कशवाग्भरम् ।
श्वश्रूरश्रूणि मुञ्चन्ती वधूं प्राह सगद्गदम् ॥ २८ ॥

मयि सत्यां पराभूतिं कस्ते कुर्यात्ततः स्वयम् ।
विद्यते कुविकल्पैस्त्वं गृहकर्मभरालसा ॥ २९ ॥

श्वशुरोऽपि च ते व्यग्रो यदा राजकुलादिह ।
आगंता च ततो देवावसरादावसज्जिते ॥ ३० ॥

मामेवाक्रोक्ष्यति त्वं तत्तथ्यं मम निवेदय ।
यथा द्राग्भवदीयार्त्तिप्रतीकारं करोम्यहम् ॥ ३१ ॥

सा न किंचिदिति प्रोच्य श्वश्रूनिर्बंधतोऽवदत् ।
युष्मत्पुत्रोऽर्द्धरात्रातिक्रमेऽभ्येति करोमि किम् ॥३२॥

श्रुत्वेत्याह तदा श्वश्रूः किं नाग्रेऽजल्पि मे पुरः ।
सुतं स्वं बोधयिष्यामि वचनैः कर्कशप्रियैः ॥ ३३ ॥

अद्य स्वपिहि वत्से त्वं निश्चिन्ताहं तु जागरम् ।
कुर्वे सर्वं भलिष्यामि नात्र कार्या धृतिस्त्वया ॥३४॥

ओमित्यथ स्नुषाप्रोक्ते रात्रौ तद्द्वारि तस्थुषी ।
विनिद्रा पश्चिमे यामे रात्रेः पुत्रः समागमत् ॥ ३५ ॥

द्वारं द्वारमिति प्रौढस्वरोऽऽसौ यावदूचिवान् ।
इयद्रात्रौ क आगन्ता मातावादीदिति स्फुटम् ॥३६॥

सिद्ध(:)सिद्ध इति प्रोक्ते तेन सा कृतकक्रुधा ।
प्राह सिद्धं न जानेऽहमप्रस्तावविहारिणम् ॥ ३७ ॥

अधुनाहं क यामीति सिद्धेनोक्ते जनन्यपि ।
अन्यदा शीघ्रमायाति यथास्मात्कर्कशं जगौ ॥ ३८ ॥

एतावत्यां निशि द्वारं विवृत्तं यत्र पश्यसि ।
तत्र यायाः समुद्धाटद्वारा सर्वापि किं निशा ॥ ३९ ॥

भवत्वेवमिति प्रोक्ते सिद्धस्तस्मान्निरीय च ।
पश्यन्ननावृतद्वारो द्वारेगादनगारिणाम् ॥ ४० ॥

सदाप्यनावृतद्वारं शालायां पश्यति स्म सः ।
मुनीन् विविधचर्यासु स्थितान्निष्पुण्यदुर्लभान् ॥४१॥

कांश्चिद्वैरात्रिकं कालं विनिद्रस्य गुरोः पुरः ।
प्रवेदयत उत्साहात्कांश्चित्स्वाध्यायरंगिणः ॥ ४२ ॥

उत्कटिकासनान् कांश्चित् कांश्चिद्गोदोहिकासनान् ।
वीरासनस्थितान् कांश्चित्सोऽपश्यन्मुनिपुङ्गवान् ॥ ४३ ॥

अचिंतयच्छमसुधानिर्झरे निर्जरा इव ।
सुस्नातशीतला एते तृष्णाभीता मुमुक्षवः ॥ ४४ ॥

मादृशा व्यसनासक्ता अभक्ताः स्वगुरुष्वपि ।
मनोरथद्रुहस्तेषां विपरीतविहारिणः ॥ ४५ ॥

धिग्जन्मेदमिहामुत्र दुर्यशो दुर्गतिप्रदम् ।
तस्मात्सुकृतिनी वेला यत्रैते दृष्टिगोचराः ॥ ४६ ॥

अमीषां दर्शनात्कोपिन्याप्युपकृतं मयि ।
जनन्या क्षीरमुक्तसमपि पित्तं प्रणाशयेत् ॥ ४७ ॥

ध्यायन्नित्यग्रतस्तस्थौ नमस्तेभ्यश्चकार सः ।
प्रदत्तधर्मलाभाशीर्निर्ग्रंथः प्रभुराह च ॥ ४८ ॥

को भवानिति तैः प्रोक्ते प्रकटं प्राह साहसी ।
शुभंकरात्मजः सिद्धो द्यूतान्मात्रा निषेधितः ॥ ४९ ॥
उद्धाटद्वारि यायास्त्वमोकसीयन्महानिशि ।

इयन्ती वाचना दत्ता प्रावृतद्वारि संगतः ॥ ५० ॥
अतःप्रभृति पूज्यानां चरणौ शरणौ मम ।
प्राप्ते प्रवहणे को हि निस्तितीर्षति नांबुधिम् ॥ ५१ ॥
उपयोगं श्रुते दत्त्वा योग्यताहृष्टमानसाः ।
प्रभावकं भविष्यंतं परिज्ञायाथ तेऽवदन् ॥ ५२ ॥
अस्मद्वेषं विना नैवास्मत्पार्श्वे स्थीयतेतराम् ।
सदा स्वेच्छाविहाराणां दुर्ग्रहः स भवादृशाम् ॥ ५३ ॥
धार्यं ब्रह्मव्रतं घोरं दुष्करं कातरैर्नरैः ।
कापोतिका तथा वृत्तिः समुदानापराभिधा ॥ ५४ ॥
दारुणः केशलोचोऽथ सर्वांगीणव्यथाकरः ।
सिकतापिंडवच्चायं निरास्वादश्च संयमः ॥ ५५ ॥
उच्चावचानि वाक्यानि नीचानां ग्रामकण्टकाः ।
सोढव्या दशनैश्चर्वणीया लोहमया यवाः ॥ ५६ ॥
उग्रं षष्ठाष्टमाद्यं तत्तपः कार्यं सुदुष्करम् ।
स्वाद्यास्वाद्येषु लब्धेषु रागद्वेषौ न पारणे ॥ ५७ ॥
इत्याकर्ण्याविदत्सिद्धो मत्सद्वयसनस्थितः ।
छिन्नकर्णोष्ठनासादिबाहुपादयुगा नराः ॥ ५८ ॥
क्षुधाकरालिताभिक्षा चौर्यादेर्वृत्तिधारिणः ।
अप्राप्तशयनस्थानाः पराभूता निजैरपि ॥ ५९ ॥
नाथ किं तदवस्थाया अपि किं दुष्करो भवेत् ।
संयमो विश्ववंद्यस्तन्मूर्ध्नि देहि करं मम ॥ ६० ॥
यददत्तं न गृह्णीमो वयं तस्मात्स्थिरो भव ।
दिनमेकं यथा विज्ञापयामः पैतृकं तव ॥ ६१ ॥
ततः प्रमाणमादेश इत्युक्त्वा तत्र सुस्थिते ।
परं हर्षं दधौ सूरिः सुविनेयस्य लाभतः ॥ ६२ ॥
इतः शुभंकरश्रेष्ठी प्रातः पुत्रं समाह्वयत् ।
शब्दादाने च संभ्रान्तः पश्यन् पत्नीं नताननाम् ॥ ६३ ॥
अद्य रात्रे कथं नागात्सिद्ध इत्युदिता सती ।
लज्जानम्रावदद् द्यूती शिक्षितोऽथ सुतो ययौ ॥ ६४ ॥
श्रेष्ठी दध्यौ महेलाः स्युरुच्चानधिषणा ध्रुवम् ।

न कर्कशवचोयोग्ये व्यसनी शिक्ष्यते शनैः ॥ ६५ ॥
ईषत्करं ततः प्राह प्रिये भव्यं त्वया कृतम् ।
वयं किं प्रवदामोऽत्र वणिजां नोचितं ह्यदः ॥ ६६ ॥
गृहाद्बहिश्च निर्याय प्रयासांगीकृतः स्थितः ।
व्यलोकयत्पुरं सर्वमहो मोहः पितुः सुते ॥ ६७ ॥
इतश्चरिंत्रिशालायामसावुपशमोर्मिभिः ।
आप्लुतोऽपूर्वसंस्थानं ततोऽवादि च तेन सः ॥ ६८ ॥
यद्येवं शमिसामीप्यस्थितिं पश्यामि ते सुतः ।
अमृतेनेव सिच्येत नन्दनानन्दनस्थिते ॥ ६९ ॥
द्यूतव्यसनिनां साध्वाचारातीतकुवेषिणाम् ।
संगतो मम हृद्दुःखहेतुः केतुरिव ग्रहः ॥ ७० ॥
आगच्छ वत्स सोत्कण्ठा तव माता प्रतीक्षते ।
किञ्चिन्मद्वचनैर्दूना संतप्ता निर्गमात्तव ॥ ७१ ॥
स प्राह तात पर्याप्तं गेहागमनकर्मणि ।
मम लीनं गुरोः पादारविंदे हृदयं ध्रुवम् ॥ ७२ ॥
जैनदीक्षाधरो मार्गं मार्गं निष्प्रतिकर्मतः ।
आचरिष्यामि तन्मोहो भवद्भिर्मा विधीयताम् ॥ ७३ ॥
याथा अपावृतद्वारे वेश्मनीत्यंविकावचः ।
शमिसंनिध्यवस्थानं मतं नस्तदभूद्वचः ॥ ७४ ॥
यावज्जीवं हि विदधे यद्यहं तत्कुलीनता ।
अक्षता स्यादिदं चित्ते सम्यक्तात विचिंतय ॥ ७५ ॥
अथाह संभ्रमाच्छ्रेष्ठी किमिदं वस्तु चिन्तितम् ।
असंख्यध्वजविज्ञेयं धनं कः सार्थयिष्यति ॥ ७६ ॥
विलस त्वं यथा सौख्यं विदेहि निजयेच्छया ।
अविमुञ्चन्सदाचारं सतां श्लाघ्यो भविष्यसि ॥ ७७ ॥
एकपुत्रा तवाम्बा च निरपत्या वधूस्तथा ।
गतिस्तयोस्त्वमेवासीर्जीर्णं माजीगणस्तु माम् ॥ ७८ ॥
पित्रेत्थमुदिते प्राह सिद्धः सिद्धशमस्थितिः ।
संपूर्णं लोभिवाणीभिस्तत्र मे श्रुतिरश्रुतिः ॥ ७९ ॥
ब्रह्मणीव मनो लीनं ममातो गुरुपादयोः ।
निपत्य ब्रूहि दीक्षां (हि) पुत्रस्य मम यच्छत ॥ ८० ॥

इति निर्बंधतस्तस्य तथा चक्रे शुभंकरः ।
गुरुः प्रादात्परिव्रज्यां तस्य पुण्ये स्वरोदये ॥ ८१ ॥

दिनैः कतिपयैर्मासमाने तपसि निर्मिते ।
शुभे लग्ने पंचमहाव्रतारोपणपर्वणि ॥ ८२ ॥

दिग्बन्धं श्रावयामास पूर्वतो गच्छ सन्ततिम् ।
सत्प्रभुः शृणु वत्स त्वं श्रीमान् वज्रप्रभुः पुरा ॥ ८३ ॥

तच्छिष्यवज्रसेनस्याभूद्विनेयचतुष्टयी ।
नागेंद्रो निर्वृतिश्चन्द्रः ख्यातो विद्याधरस्तथा ॥ ८४ ॥

आसीन्निर्वृत्तिगच्छे च सुराचार्यो धियां निधिः ।
तद्विनेयश्च गर्गर्षिरहं दीक्षागुरुस्तव ॥ ८४ ॥
शीलाङ्गानां सहस्राणि त्वयाष्टादश निर्भरम् ।
वोढव्यानि विविश्राममाभिजात्यफलं ह्यदः ॥ ८६ ॥

ओमिति प्रतिपद्याथ तप उग्रं चरन्नसौ ।
अध्येता वर्त्तमानानां सिद्धान्तानामजायत ॥ ८७ ॥

स चोपदेशमालाया वृत्तिं बालावबोधिनीम् ।
विदधेऽवहितप्रज्ञः सर्वज्ञ इव गीर्भरैः ॥ ८८ ॥

सूरिर्दाक्षिण्यचंद्राख्यो गुरुभ्रातास्ति यस्य सः ।
कथां कुवलयमालां चक्रे शृंगारनिर्भराम् ॥ ८९ ॥

किंचित्सिद्धकृतग्रंथसोत्प्रासः सोवदत्तदा ।
लिखितैः किं नवोग्रन्थस्तदवस्थागमाक्षरैः ॥ ९० ॥

शास्त्रं श्रीसमरादित्यचरितं कीर्त्यते भुवि ।
यद्रसोर्मिप्लुता जीवाः क्षुत्तृडाद्यं न जानते ॥ ९१ ॥

अथोत्पत्तिरसाधिक्यसारा किंचित्कथापि मे ।
अहो ते लेखकस्येव ग्रन्थः पुस्तकपूरणः ॥ ९२ ॥

अथ सिद्धकविः प्राह मनो दूनोपि (षि) नो खरम् ।
वयोतिक्रांतपाठानामीदृशी कविता भवेत् ॥ ९३ ॥

का स्पर्द्धा समरादित्यकवित्वे पूर्वसूरिणा ।
खद्योतस्येव सूर्येण मादृग्मन्दमतेरिह ॥ ९४ ॥

इत्थमुद्वेजितस्वांतस्तेनासौ निर्ममे बुधः ।
अन्यदुर्बोधसंबद्धां प्रस्तावाष्टकसंभृताम् ॥ ९५ ॥
रम्यामुपमितभवप्रपंचाख्यां महाकथाम् ।
सुबोधकथितां विद्वदुत्तमांगविधूननीम् ॥ ९६ ॥
ग्रन्थव्याख्यानयोग्यं यदेनं चक्रे शमाश्रयम् ।
अतः प्रभृति संघोऽत्र व्याख्यातृविरुदं ददौ ॥ ९७ ॥
दर्शिताथास्य तेनाथ हसितुः स ततोऽवदत् ।
ईदृक् कवित्वमाधेयं त्वद्गुणाय मयोदितम् ॥ ९८ ॥
ततो व्यचिंतयत्सिद्धो ज्ञायते यदपीह न ।
तेनाप्यज्ञानता तस्मादध्येतव्यं ध्रुवं मया ॥ ९९ ॥
तर्कग्रन्था मयाधीताः स्वपरेऽपीह ये स्थिता ।
बौद्धप्रमाणशास्त्राणि न स्युस्तद्देशमन्तरा ॥ १०० ॥
आपप्रच्छे गुरुं सम्यग्विनीतवचनैस्ततः ।
प्रान्तरस्थितदेशेषु गमनायोन्मनायितः ॥ १०१ ॥
निमित्तमवलोक्याथ श्रौतेन विधिना ततः ।
सवात्सल्यमुवाचाथ नाथ प्राथमकल्पिकम् ॥ १०२ ॥
असन्तोषः शुभोऽध्याये वत्स किंचिद्वदामि तु ।
स त्वमत्र न सत्वानां समये प्रमये धिया ॥ १०३ ॥
भ्रान्तं चेतः कदापि स्याद्धेत्वाभासैस्तदीयकैः ।
अर्थी तदागमश्रेणेः स्वसिद्धान्तपराङ्मुखः ॥ १०४ ॥
उपार्जितस्य पुण्यस्य नाशं त्वं प्राप्स्यसि ध्रुवम् ।
निमित्तत इदं मन्ये तस्मान्मात्रोद्यमी भव ॥ १०५ ॥
अथ चेदवलेपस्ते गमने न निवर्त्तते ।
तथापि मम पार्श्वं त्वमागा वाचा ममैकदा ॥ १० ॥
रजोहरणमस्माकं व्रताङ्गं न समर्प्पये ।
इत्युक्त्वा मौनमातिष्ठद्गुरुं चित्तव्यथाधरः ॥ १०७ ॥
प्राह सिद्धः श्रुती च्छादयित्वा शान्तं हि कल्मषम् ।
अमङ्गलं प्रतिहतमकृतज्ञः क ईदृशः ॥ १०८ ॥
चक्षुरुद्घाटितं येन मम ज्ञानमयं मुदा ।

पुनस्तद्वयासयेत्कोहि धूमायितपरोक्तिभिः ॥ १०९ ॥
अन्त्यं वचः कथं नाथ मयि पूज्यैरुदाहृतम् ।
कः कुलीनो निजगुरुक्रमयुग्मं परित्यजेत् ॥ ११० ॥
मनः कदापि गुप्येत चेद्धत्तूरभ्रमादिव ।
तथापि प्रभुपादानामादेशं विदधे ध्रुवम् ॥ १११ ॥
इत्युदित्वा प्रणम्याथ स जगाम यथेप्सितम् ।
महाबोधाभिधं बौद्धपुरमव्यक्तवेषभृत् ॥ ११२ ॥
कुशाग्रीयमतेस्तस्याक्लेशेनापि प्रबोधतः ।
विद्वद्भेदशास्त्राणि तेषामासोच्चमत्कृतिः ॥ ११३ ॥
तस्याङ्गीकरणे मन्त्रस्तेषामासोद्दरासदः ।
तमस्युद्योतको रत्नमाप्य माध्यस्थ्यमाश्रयेत् ॥ ११४ ॥
तादृग्वचःप्रपंचैस्तैर्वर्द्धकैर्गर्द्धकैरपि ।
तं विप्रलम्भयामासुर्मीनवद्धीवरा रसात् ॥ ११५ ॥
शनैर्भ्रांतमनोवृत्तिर्बभूवासौ यथा तथा ।
तदीयदीक्षामादत्त जैनमार्गातिनिस्पृहः ॥ ११६ ॥
अन्यदा तैर्गुरुत्वेऽसौ स्थाप्यमानोऽवदन्ननु ।
एकवेलं मया पूर्वं संवीक्ष्या गुरवो ध्रुवम् ॥ ११७ ॥
इति प्रतिश्रुतं यस्मात्तदग्रे तत्प्रतिश्रवम् ।
सत्यसंधस्त्यजेत्तत्कस्तत्र प्रहिणुताथ माम् ॥ ११८ ॥
इति सत्यप्रतिज्ञत्वमतिचारु च सौगते ।
मन्यमानास्ततः प्रैषुः स चागाद्गुरुसन्निधौ ॥ ११९ ॥
गत्वाथोपाश्रये सिंहासनस्थं वीक्ष्य तं प्रभुम् ।
ऊर्ध्वस्थानशुभा यूयमित्युक्त्वा मौनमास्थितः ॥ १२० ॥
गर्गस्वामी व्यमृक्षच्च संजज्ञे तदिदं कुलम् ।
अनिमित्तस्य जैनीवाग् नान्यथा भवति ध्रुवम् ॥ १२१ ॥
अस्माकं ग्रहवैषम्यमिदं जज्ञे यदीदृशः ।
सुविनेयो महाविद्वान् परशास्त्रप्रलंभितः ॥ १२२ ॥
तदुपायेन केनापि बोध्योऽसौ यदि भोत्स्यते ।
तदस्माकं प्रियं भाग्यैरुदितं किं बहूक्तिभिः ॥ १२३ ॥

ध्यात्वेत्युत्थाय गुरुभिस्तं निवेश्यासनेऽर्पिता ।
चैत्यवंदनसूत्रस्य वृत्तिर्ललितविस्तरा ॥ १२४ ॥

ऊचुश्च यावदायामः कृत्वा चैत्यनतिं नयम् ।
ग्रन्थस्तावदयं वीक्ष्य इत्युक्त्वा तेऽगमन् बहिः ॥ १२५ ॥

ततः सिद्धश्च तं ग्रन्थं वीक्ष्यमाणो महामतिः ।
व्यमृशत्किमकार्यं तन्मयारब्धमचिन्तितम् ॥ १२६ ॥
कोऽन्य एवंविधो मादृगविचारितकारकः ।
स्वार्थभ्रंशैः पराख्यानैर्मणिं काचेन हारयेत् ॥ १२७ ॥

मदोपकारी स श्रीमान् हरिभद्रप्रभुर्यतः ।
मदर्थमेव येनासौ ग्रंथोऽपि निरमाप्यत ॥ १२८ ॥

आचार्यो हरिभद्रो मे धर्मबोधकरो गुरुः ।
प्रस्तावे भावतो हन्त स एवाद्य निवेशितः ॥ १२९ ॥

अनागतं परिज्ञाय चैत्यवंदनसंश्रया ।
मदर्थं निर्मिता येन वृत्तिर्ललितविस्तरा ॥ १३० ॥

विषं विनिर्धूय कुवासनामयं व्यवीवदद्यः कृपया महाशये ।
अचिन्त्यवीर्येण सुवासनासुधां नमोऽस्तु तस्मै हरिभद्रसूरये ॥ १३१ ॥

किं कर्त्ता च मया शिष्याभासेनाथ गुरुर्मम ।
विज्ञायैतन्निमित्तेनोपकर्त्तुं त्वाह्वयन्मिषात् ॥ १३२ ॥

तदङ्घ्रिरजसा मौलिं पावयिष्येऽधुना निशम् ।
आगः स्वं कथयिष्यामि गुरुः स्यान्नह्यनीदृशः ॥ १३३ ॥
तथागतमतिभ्रान्तिर्गता मे ग्रन्थतोऽमुतः ।
कोद्रवस्य यथा शस्त्राघाततो मदनभ्रमः ॥ १३४ ॥

एवं चिन्तयतस्तस्य गुरुर्बाह्यभुवस्ततः ।
आगतस्तद्दृशं पश्यन् पुस्तकस्थं मुदं दधौ ॥ १३५ ॥

नैषेधिकीमहाशब्दं श्रुत्वोद्धुः संभ्रमादभूत् ।
प्रणम्य रूतयामास शिरसा तत्पदद्वयम् ॥ १३६ ॥

उवाच किं निमित्तोयं मोहस्तव मयि प्रभो ।
कारयिष्यन्ति चैत्यानि पश्चात्किं मादृशोऽधमाः ॥ १३७ ॥
उन्मीलाद्दूषकास्फोटस्फुटवेदनविद्रुहः ।

स्यादविज्ञाश्चलो दन्ताः कुशिष्याश्च गताशुभाः ॥ १३८ ॥

आहूतो मिलनव्याजोद्बोधायैव ध्रुवं प्रभा।
हारिभद्रस्तथा ग्रन्था भवता विदधे करे ॥ १३९ ॥

भग्नभ्रमः कुशास्त्रेषु प्रभुं विज्ञपते ततः।
स्वस्यान्तेवासिपाशस्य पृष्ठे हस्तं प्रदेहि मे ॥ १४० ॥

देवगुर्वाद्यवज्ञोत्थमहापापस्य मे तथा।
प्रायश्चित्तं प्रयच्छाद्य दुर्गतिच्छित् कृपां कुरु ॥ १४१ ॥

अथोवाच प्रभुस्तत्र करुणाशरणाशयः।
आनन्दाश्रुपरिश्रुत्या परिक्लिन्नोत्तरीयकः ॥ १४२ ॥

मा खेदं वत्स कार्षीस्त्वं को वनीवद्यते नवा।
पानशौण्डैरिवाभ्यस्तकुतर्कमदविह्वलैः ॥ १४३ ॥

नाहं त्वां धूर्त्तितं मन्ये यद्वचो विस्मृतं न मे।
मदेन विकलः कोऽपि त्वां विना प्राक्श्रुतं स्मरेत् ॥ १४४ ॥

वेषादिधारणं तेषां विश्वासायापि सम्भवेत्।
अतिभ्रान्तिं च नात्राहं मानये तव मानसे ॥ १४५ ॥

प्रख्यातवक्तृकप्रज्ञा ज्ञातशास्त्रार्थमर्मकः।
कः शिष्यस्त्वादृशो गच्छेऽतुच्छे मच्चित्तविभ्रमः ॥ १४६ ॥

इत्युक्तिभिस्तमानन्द्य प्रायश्चित्तं तदा गुरुः।
प्रददेऽस्य निजे पट्टे तथा प्रातिष्ठिपच्च तम् ॥ १४७ ॥

स्वयं तु भूत्वा निस्संगस्तुंगद्रंगभुवं तदा।
हित्वा प्राच्यर्षिचीर्णाय तपसेऽरण्यमाश्रयत् ॥ १४८ ॥

कायोत्सर्गी कदाप्यस्थादुपसर्गसहिष्णुधीः।
कदापि निर्निमेषाक्षः प्रतिमाभ्यासमाददे ॥ १४९ ॥

कदाचित्पारणे प्रान्ताहारधारितशंबरम्।
कदाचिन्मासिकाद्यैश्च तपोभिः कर्म सोऽक्षिपत् ॥ १५० ॥

एवं प्रकारमास्थाय चारित्रं दुश्चरं तदा।
आयुरन्ते विधायाथानशनं स्वर्ययौ सुधीः ॥ १५१ ॥

इतश्च सिद्धव्याख्याता विख्यातः सर्वतोमुखे।

पाण्डित्यं पण्डितमन्यपरशासनजित्वरः ॥ १५२ ॥
समस्तशासनोद्योतं कुर्वन्सूर्य इव स्फुटम् ।
विशेषतोऽवदानैस्तु कृतनिर्वृतिनिर्वृतिः ॥ १५३ ॥
असंख्यतीर्थयात्रादिमहोत्साहैः प्रभावना ।
कारयद्धार्मिकैः सिद्धो वचःसिद्धिं परां दधौ ॥ १५४ ॥
श्रीमत्सुप्रभदेवनिर्मलकुलालंकारचूडामणिः ।
श्रीमन्माघकवीश्वरस्य सहजप्रेक्षापरीक्षानिधिः ।
तद्वृत्तं परिचिन्त्य कुग्रहपरिष्वंगं कथञ्चित्कलिः
प्रागल्भ्यादपि सङ्गतं त्यजत भो लोकद्वये सिद्धये ॥ १५५ ॥
श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चंद्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ सिद्धर्षिवृत्ताख्यया
श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गो जगत्संख्यया ॥ १५६ ॥

१५७। ग्रं १६० उभयं ३३८०।

इति श्रीसिद्धर्षिप्रबन्धः

---

एकषष्ट्युत्तरत्रयोदशशतमिते ( १३६१ ) विक्रमाब्दे मेरुतुङ्गाचार्य्यं प्रणीते प्रबन्धचिन्तामणौ चायम्प्रबन्धः समुपलभ्यते:—

अथ श्री भोजः श्रीमाघपण्डितविद्वत्तां पुण्यवत्तां च सततमाकर्ण्य तद्दर्शनोत्सुकतया राजादेशैः सततं प्रेष्यमाणैः श्रीमालनगराद्धिमसमये समानीय सबहुमानं भोजनादिभिः सत्कृत्य तदनु राजोचितान्विनोदान्दर्शयन्, रात्रावारात्रिकावसरानन्तरं सन्निहिते स्वसन्निभे पल्यङ्के माघपण्डितं नियोज्य तस्मै स्वशीतरक्षामुपनीय प्रियालापांश्चिरं कुर्वाणः सुखं सुखेन सुष्वाप । प्रातर्माङ्गल्यतूर्यनिर्घोषैर्विनिद्रं नृपं स्वस्थानगमनाय माघपण्डित आपृष्टवान् । विस्मयापन्नहृदयेन राज्ञा दिने भोजनाच्छादनादिसुखं पृष्टः स कदन्नसदन्नवार्ताभिरलं शीतभारेण श्रान्तं विज्ञपयन्खिद्यमानेन राज्ञा कथं कथञ्चिदनुज्ञातः पुरोपवनं यावद्भूभुजानुगम्यमानः माघपण्डितेन स्वागमनप्रसादेन संभावनीयोऽहमिति विज्ञतो नृपानुज्ञातः स्वं पदं भेजे । तदनु कतिपयदिनैः श्रीभोजस्तद्विभवभोगसामग्रीदिदृक्षया श्रीमालनगरं प्राप्तः ।

माघपण्डितेन प्रत्युद्गमादियथोचितभक्त्याऽऽवर्जितः स सैन्यस्तन्मन्दुरायां ममौ। स्वयं तु माघपण्डितस्य सौधमध्यास्य संचारकभुवं काञ्चनबद्धामवलोक्य स्नानादनु देवतावसथोर्व्यां मणिमरकतकुट्टिमशैवलवल्लरीयुग्जलभ्रान्त्या धौताम्बरीयं संवृण्वन् सौवस्तिकेन ज्ञापितवृत्तान्तस्तदैव तद्देवतार्चानन्तरं निवृत्ते मन्त्रावसरेऽशनसमयसमागतां रसवतीमास्वादयन् आकालिकैरदेशजैर्व्यञ्जनैः फलादिभिश्चित्रीयमानमानसः संस्कृतपयःशालिशालिनीं रसवतीमाकण्ठमुपभुज्य भोजनान्ते चन्द्रशालामधिरुह्याश्रुतादृष्टपूर्वकाव्य-कथाप्रबन्धप्रेद्यादीनि प्रेक्षमाणः शिशिरसमयेऽपि संजाताकस्मिकग्रीष्मभ्रान्त्या संवीतसितस्वच्छवसनस्तालवृन्तकरैरनुचरैर्वीज्यमानोऽमन्दचन्दनालेपनेपथ्यः सुखनिद्रया तां क्षणदां क्षणमिवातिवाह्य प्रत्यूषे शङ्खनिस्वनाद्विगतनिद्रो हिमसमये ग्रीष्मावतारव्यतिकरो माघपण्डितेन ज्ञापितः प्रतिसमयं सविस्मयः कति दिनान्यवस्थाय स्वदेशगमनायापृच्छन् स्वयं करिष्यमाणनव्यभोजस्वामिप्रसादप्रदत्तपुण्यो मालवमण्डलं प्रतिप्रतस्थे। तथा निजजन्मदिने जनकेन नैमित्तिकाज्जातके कार्यमाणे पूर्वमुदितोदितसमृद्धिर्भूत्वा प्रान्ते गलितविभवः किंचिच्चरणयोराविर्भूतश्वयथुविकारः पञ्चत्वमाप्स्यति इति। निमित्तविदा निवेदितां विभवसंभारेण तां ग्रहगतिं निराचिकीर्षुणा माघपित्रा संवत्सरशतप्रमाणे मनुजायुषि षट्त्रिंशत्सहस्राणि दिनानि भविष्यन्तीति विमृश्य नाणकपरिपूर्णांस्तावत्संख्यान् हारकान् कारितनव्यकोशेषु निवेश्य तदधिकां परां भूतिं शतशः समर्प्य प्रदत्तमाघनाम्ने सुताय कुलोचितां शिक्षां वितीर्य कृतकृत्यमानिना तेन विपेदे। तदनन्तरमुत्तराशापतिरिव प्राज्यसाम्राज्यो विद्वज्जनेभ्यः श्रियं तदिच्छया यच्छन्नमानैर्दानैरर्थिसार्थं कृतार्थयंस्तैर्भोगविधिभिः स्वममानुषावतारमिव दर्शयन् विरचितशिशुपालवधाभिधानमहाकाव्यचमत्कृतविद्वज्जनः स प्रान्ते पुण्यक्षयात्क्षीणवित्तो विपत्तिपाते स्वविषये स्थातुमप्रभूष्णुः सकलत्रो मालवमण्डले गत्वा धरायां कृतावासः पुस्तकग्रहणार्पणपूर्वकं श्रीभोजात्कियदपि द्रव्यमानेयमिति तत्र पत्नीं प्रस्थाप्य यावत्तदाशया माघपण्डितश्चिरं तस्थौ। तावत्तथावस्थां श्रीभोजस्तत्पत्नीं विलोक्य ससंभ्रमाशलाकान्यासेन तत्पुस्तकमुन्मुच्य काव्यमद्राक्षीत्॥

कुमुदवनमपश्रि श्रमदम्भोजषण्डं
त्यजति मदमुलूकः प्रीतिमांश्चक्रवाकः ।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिललितानां ही विचित्रोविपाकः ॥ १ ॥

अथ काव्यार्थमवगम्य, का कथा ग्रन्थस्य केवलमस्यैव काव्यस्य विश्वम्भरामूल्यमल्पम् । समयोचि "तस्यानुच्छिष्टस्य" ही शब्दस्य पारितोषिके क्षितिपतिर्लक्षद्रव्यं वितीर्य तां ससर्ज । सापि ततः सञ्चरन्ती विदितमाघपण्डिपत्नी कैश्चिद्भिरर्थिभिर्याच्यमाना तत्पारितोषिकं तेभ्यः समस्तमपि वितीर्य यथावस्थिता गृहमुपेयुषी तद्वृत्तान्तं विज्ञापनापूर्वं किञ्चिच्चरणस्फुरच्छोफाय पत्ये निवेदयामास । अथ त्वमेव मे शरीरिणी कीर्त्तिरिति श्लाघमानस्तदा स्वगृहमागतं कमपि भिक्षुं वीक्ष्य भुवने तदुचितं किमपि देयमपश्यन् संजातनिर्वेद इदमवादीत् ॥

अर्था न सन्ति न च मुञ्चति मां दुराशा
दानाद्धि सङ्कुचति दुर्ललितः करो मे ।
याञ्चा च लाघवकरी स्ववधे च पापं
प्राणाः स्वयं व्रजत किं परिदेवितेन ॥ १ ॥

दारिद्र्यानलसंतापः शान्तः संतोषवारिणा ।
दीनाशाभङ्गजन्मा तु केनायमुपशाम्यतु ॥ २ ॥

व्रजत व्रजत प्राणा अर्थिनि व्यर्थतां गते ।
पश्चादपि हि गन्तव्यं क्व सार्थः पुनरीदृशः ॥ १ ॥

नभिक्षा दुर्भिक्षे पतति दुरवस्थाः कथमृणं
लभन्ते कर्माणि क्षितिपरिवृढान्कारयति कः ।
अदत्वापि ग्रासं ग्रहपतिरसावस्तमयते
क्व यामः किं कुर्मो गृहिणि गहनो जीवितविधिः ॥ २ ॥

क्षुत्क्षामः पथिकोमदीयभवनं पृच्छन्कुतोऽप्यागतः
तत्किं गेहिनि किंचिदस्ति यदयं भुङ्क्ते बुभुक्षातुरः ।
वाचास्तीत्यभिधाय नास्ति च पुनः प्रोक्तं विनैवाक्षरैः
स्थूलस्थूलविलोललोचनजलैर्बाष्पाम्भसां बिन्दुभिः ॥ ३ ॥

इति तद्वाक्यान्त एव स माघपण्डितः पञ्चत्वमवाप । प्रातस्तं वृत्तान्तमवगम्य श्रीभोजेन श्रीमालेषु सजातिषु धनवत्सु सत्सु तस्मिन्पुरुषरत्ने विनष्टे क्षुधाबाधिते सति भिल्लमाल इति तज्ज्ञातं नाम निर्ममे ॥

वल्लालपण्डितसंकलिते भोजप्रबन्धेऽपि—"ततोऽन्यदा राजनि सिंहासनासीने श्रीभोजे द्वाःस्थः प्रणम्य राजानं प्राह—'राजन्, गुर्जरदेशादागत्य माघनामा पण्डितवरो दुर्भिक्षेणातिविडम्बितो देवस्य नगराद्बहिस्तिष्ठति। तेन च दारिद्र्यविडम्बितेन पण्डितेन स्वपत्नी प्रेषिता। सा च भवनद्वारि वर्तते' राजा—'प्रवेशय।' ततो माघपण्डितस्य पत्नी प्रविश्य राज्ञः पत्रं प्रयच्छति। राजा तदादाय वाचयति—

'कुमुदवनमपश्रि श्रीमदम्भोजषण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिलसितानां ह्री विचित्रो विपाकः॥'

(शिशुपालवधे ११।६४)

राजा तदद्भुतगुणं प्रभातवर्णनमाकर्ण्य लक्षत्रयं दत्त्वा माघपत्नीं प्रति प्राह—'मातः, इदं मया भोजनाय दीयते। प्रातरहं माघपण्डितं नमस्कर्तुमागमिष्यामि।' ततः सा माघपत्नी तदादाय स्वस्थानमागच्छन्ती याचकव्रातात्स्वभर्तुः शारदचन्द्रकिरणगौरान्गुणाञ्छ्रुत्वा तेभ्यो याचकेभ्यो निखिलमपि धारेन्द्रदत्तं वित्तं दत्तवती। दत्त्वा च माघपण्डितं प्राह—'नाथ, राज्ञा भोजेनाहं बहुमानिता, धनं चातिभूरि दत्तम्। मया च मार्गे आयान्त्या याचकमुखेभ्यो लोकोत्तरांस्तांस्तांस्तव गुणानाकर्ण्य तन्निखिलमपि वित्तं याचकेभ्यो दत्तम्।' माघः प्राह—देवि साधु कृतम्। परमन्ये याचका आयान्ति तेभ्यः किं दातव्यम्। ततो माघपण्डितं वस्त्रावशेषं विदित्वा कोऽप्यर्थी प्राह—

'आश्वास्य पर्वतकुलं तपनोष्मतप्त-
मुद्दामदावविधुराणि च काननानि।
नानानदीनदशतानि च पूरयित्वा
रिक्तोऽसि यज्जलद सैव तवोत्तमा श्रीः'॥

ततो माघः पत्नीं प्राह—

'अर्था न सन्ति न च मुञ्चति मां दुराशा
त्यागान्न संकुचति दुर्ललितं मनो मे ।
याञ्चा च लाघवकरी स्ववधे च पापं
प्राणाः स्वयं व्रजत किं नु विलम्बितेन ॥
दारिद्र्यानलसंतापः शान्तः संतोषवारिणा ।
याचकाशाविघातान्तर्दाहः केनोपशाम्यति ॥'

देवि किं बहुना । चित्ते कष्टं किमपि नास्ति । परं तथाप्युच्यते—

'न भिक्षा दुर्भिक्षे पतति दुरवस्थाः कथमृणं
लभन्ते कर्माणि द्विजपरिवृढान्कारयति कः ।
अदत्त्वैव ग्रासं ग्रहपतिरसावस्तमयते
क्व यामः किं कुर्मो गृहिणि ! गहनो जीवनविधिः ॥'

ततस्तथाविधामवस्थां माघस्य विलोक्य सर्वे याचका यथास्थानमगुः । याचकेषु यथास्थानं गच्छत्सु माघः प्राह—

'व्रजत व्रजत प्राणा अर्थिनि व्यर्थतां गते
पश्चादपि हि गन्तव्यं क्व सार्थः पुनरीदृशः ॥'

ततो माघपत्नी स्वामिनि परलोकं प्राप्ते प्राह—

सेवन्ते स्म गृहं यस्य दासवद्भूभुजः पुरा ।
हाद्य भार्यासहायोऽयं मृतो वै माघपण्डितः ॥'

ततो राजा माघपण्डितं विपन्नं विदित्वा निजनगराद्ब्राह्मणशतावृतो मौनी पद्भ्यामेव तत्रागात् । ततो माघपत्नी राजानं वीक्ष्य प्राह—'राजन्, यदि पण्डितस्तव देशं प्राप्तस्तर्हिं गृहमेव प्राप्तः । ततो देवेन कार्यशेषं सम्यक्संपादनीयम् ।' राजा तं विपन्नं माघपण्डितं नर्मदातीरं प्रापयामास । सा च माघपत्नी तेन सह वह्निप्रवेशं कृतवती । ततो राजा माघस्योत्तरक्रियां पुत्र इव चक्रे । ततो दिवं गते माघे राजा शोकाकुलो विशेषेण कालिदासविरहेण तथा सकलविद्वत्प्रवसनेन च दिने दिने कार्श्येन प्रतिपच्चन्द्राकृतिरासीत् ।" अयं प्रबन्धः समुपलभ्यते ।

1. अयञ्च एतत्प्रबन्धत्रयविलोकनेन गीर्वाणवाणिप्रणयिप्रवणस्य कदा वायमिममिला- मालवीयस्य धाराधिपतेर्भोजराजस्य समसामयिक मण्डलं मण्डयामास इति ईशवीय १० मशताब्द्या अवसाने भुवमलमकृतेति कस्यचित्सिद्धान्तः ।

2. शार्मण्यदेशीयः क्लाट पण्डितः ( Dr. F. Klat. ) माघकवेः सत्तां खिस्ताब्दीयदशमशतकारम्भे स्थिरीकरोति परं तत्रत्य एव याकोबी पण्डितः ( Prof· Jacobi ) ह्वीएना ओरिएण्टलजर्नलनाम्नस्त्रैमासिकपुस्तकस्य द्वितीयभागे द्वितीयखण्डे " We Therefore cannot place magh later than about the middle of the sixth century " इति वदन् खिस्ताब्दीयषष्ठशतकमध्यभागात् कथमपि नार्वाचीनो माघकविरिति निश्चिनोति ।

3. माघस्य पितृव्यपुत्रः शुभङ्करात्मजः सिद्ध इत्यपरनामा हर्यश्वः, यः स्वपरिणयानन्तरं बौद्धमतमङ्गीचकार खिस्ताब्दीयषष्ठशतकारम्भे माघस्य सत्ताकालममन्यत ।

4. विद्वत्प्रवराः महामहोपाध्यायाः श्रीदुर्गाप्रसादमहोदयास्तु शिशुपालवधीयभूमिकायामेवमुदलिखन् :—

यत् " माघकविस्तु खिस्ताब्दीय नवमशतकात्कथमपि नार्वाचीनः, यतः काश्मीरेषु नवमशतकोत्तरभागे वर्तमानाः श्रीमदानन्दवर्धनार्याः काव्यमालायां मुद्रितस्य ध्वन्यालोकस्य द्वितीयोद्द्योते ११४ तमे ११५ तमे च पृष्ठे, " त्रासाकुलः परिपतन् " इत्यादि पद्यं, "रम्या इति प्राप्तवतीः " इत्यादिपद्यञ्च शिशुपालवधादुदाहृतवन्तः ।"

5. श्रद्धेयपादास्तत्रभवन्तः श्रीमन्तो रामावतारशर्माणस्तु स्वीये भारतीयमितिवृत्ते जयापीड़समकालिक-कविवर्णनावसरे तदधस्तनो माघ इति प्रकटितवन्तः । स च जयापीड़ः ७०१ आरभ्य ७३५ शकाब्दं यावत् काश्मीरान् शशास ।

6. सी० डी० दलाल महोदयोऽपि ।—"He (Vaman) has auoted one line of a verse which occurs in the Siśupâlavadha of Magha. Magh was the grandson of

Suprabhadeva who was the minister of Varmalat King of Bhinnamâla. Varmalat is mentioned in the Vasantgaḍh inscription of Samvat 682 (A. D. 625). एवमुदाजहार ।

अत्रैवं मीमांसयामः—

अस्य भोजसमकालसत्ता तु केवलं लोकश्रुतिरेवेति न मे श्रद्धापथमध्यास्ते ।

Dr. F. Klat विदुषो मतं यदस्य खिस्ताब्दीयदशमशतकारम्भ-समयः, तथा नवमशतकोत्तरभागभवेन श्रीमदानन्दवर्धनाचार्येण ध्वन्यालोकेऽस्य पद्ये समुदाहृत इति प्रतिपादयतां महामहोपाध्यायानां श्रीदुर्गाप्रसादमहोदयानामपि नवमशतकपर्यन्तमनुधावनं न मे प्रामाण्यतयाऽवतिष्ठते ।

वसन्तगढीयशिलालेखस्तु सुदृढं प्रमाणभूतः ।

एवञ्चैषाम्प्रमाणानाम्पर्यालोचनया माघः षष्ठशतकेऽभूदिति सिद्धमतं निराकर्तुं स्पष्टतया समर्थं प्रमाणं नोपलभामहे ।

तथापि सप्तमशतकपूर्वार्धे हर्षसभामलङ्कुर्वाणस्य बाणस्य माघविषये मौनावलम्बस्तत्रापि सन्देहमेवावहति ।

अयमेवाभिप्रायः श्रीमतामाराध्यचरणानां भारतगौरवालङ्काराणां सरस्वतीविभूतीनामाचार्य्य-श्रीरामावतारशर्ममहाशयानां स्वरचित-भारतीयमितिवृत्तात्तेषां सुधा-सुभाषिताच्च समधिगँस्यत ।

माघः किल महाकवि-भारवि-विरचितं किरातार्जुनीयं सम्यगभ्यस्यैव शिशुपालवधं प्रणिनायेति तुलनायामनुपदमेव स्फुटीभविष्यति ।

सच भारविः* माघापेक्षयाऽति प्राचीन इति प्रागेव निरणीयत ।

मम च मते महाप्रतिभा-प्रभारवे-र्महाकवे-र्माघस्य ईशवीयसार्धषष्ठशतकात्परं दश समा यावत्प्रादुर्भाव समय इति मन्ये यतः खिस्ताब्दी-

*किरातार्जुनीयकाव्यप्रणेतु"र्भारवि"रित्युपाधिस्तस्याभिधानन्तु दामोदर इत्यतिप्राचीनाद्दण्डिकविप्रणीतादवन्तिसुन्दरीकथासारादवगम्यते । अस्य विस्तारोऽस्मत्प्रकाशितकिरातार्जुनीयस्य द्वितीयसंस्करणभूमिकायां भविता ।

याष्टमशतकोद्भवो वामनः स्वीयेऽलङ्कारसूत्रे माघमनुसस्मार ।

नहि तथाविधः कश्चित्तत्त्वविद्विपश्चित् यः खलु स्वस्मादनतिप्राचीनस्य यस्य कस्यचिद्विदुषः कृतेरंशः स्वग्रन्थस्य महिमानं संवर्धयितुं तत्रोपन्यस्यति ।

स्वग्रन्थमहिमानं संविवर्धयिषुभिः सर्वैरेव कोविदैरतिप्राचीनस्यैव लोकविदितस्य ग्रन्थः प्रमाणतयोपन्यस्यते ।

एवं स्थिते यदि वामनेन स्वल्पीयानन्यस्य कृतेरंशः स्वीये सूत्रे प्रमाणत्वेनोपन्यस्तस्तदावश्यमेव माघो वामनादतिप्राचीन इति सम्भाव्यते ।

उद्दिष्टपुरुषात्प्राक् पञ्चविंशतिवर्षमपि पूर्वस्थितेर्विदुषः प्राचीनत्वमुपपद्यते परं न खलु तावतैव कालेन तद्ग्रन्थोऽपि प्रमाणत्वेन कश्चिदुपन्यस्यति ।

ग्रन्थस्य प्रमाणतयोपन्यासयोग्यतायां ततोऽप्यधिकः कालोऽपेक्षते ।

इत्यवश्यमेव माघो वामनापेक्षया न्यूनतोऽपि शतं सार्धशतं वा वर्षाणि प्रागासीदेवेत्यनुमन्ये ।

एवं पैतृकीं सम्पदमासाद्य सुखेन समयन्नयन्नयम्माघः स्वीयमशेषं यशोराशिं आसंसृति जगति सुचिरं स्थिरयितुमभिलषन् शिशुपालवध-महाकाव्यस्य लेखनं प्रारभत । ग्रन्थान्ते च स्ववंशवर्णनावसरे स्वयमेवायं व्याजहार

कथं वास्य प्रवृत्तिरत्यां महाकाव्यरचनायाम्

"श्रीशब्दरम्यकृतसर्गसमाप्तिलक्ष्म
लक्ष्मीपतेश्चरितकीर्तनचारुमाघः ।
तस्यात्मजः सुकविकीर्तिदुराशयादः
काव्यं व्यधत्त शिशुपालवधाभिधानम् "

अस्य व्यावहारिकं ज्ञानं नीतिनैपुण्यञ्च नीतिपूर्णपद्यैरेव पदे पदे प्रतिपद्यते । तथाहि :—

कथञ्च व्यावहारिकं विज्ञानम्

"ग्रहीतुमार्यान् परिचर्यया मुहुर्महानुभावा हि नितान्तमर्थिनः "

" निपातनीया हि सतामसाधवः "
" सदाभिमानैकधना हि मानिनः "
" श्रेयसि केन तृप्यते "
" महीयांसः प्रकृत्या मितभाषिणः "
" क्रिया केवलमुत्तरम् "
" विपक्षमखिलीकृत्य प्रतिष्ठा खलु दुर्लभा "
" अनीत्वा पङ्कतां धूलिमुदकं नावतिष्ठते "
" ध्रियते यावदेकोऽपि रिपुस्तावत्कुतः सुखम् ।
" पुरः क्लिश्नाति सोमं हि सैंहिकेयोऽसुरद्रुहाम् "
" कथापि खलु पापानामलमश्रेयसे यतः "
" विधाय वैरं सामर्षे नरोऽरौ य उदासते
प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम् "
" चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया
स्वेद्यमामज्वरम्प्राज्ञः कोऽम्भसा परिषिञ्चति "
" सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः "

इत्यादिभिर्बहुभिः पद्यैः प्रतीयते यदयं न केवलं व्यवहारनीतावेव प्रकाण्डः पण्डितः, परं राजनीतावपि नासीदस्य समानकोटिकः कश्चिन्नीतितत्त्वविद्विपश्चित् ।

भारवेरर्वाचीनो माघः किरातार्जुनीयं सम्यगभ्यस्यैव शिशुपालवधं प्रणिनायेति शिशुपालवधावलोकनत एव स्फुटी भवति ।

तुलना

भारविर्यथा आरम्भे श्रीशब्दमयुङ्क्त तथैव माघोऽपि "श्रियः पतिः श्रीमति शासितुं" इत्यादौ श्रीशब्दम्प्रायुङ्क्त ।

प्रतिसर्गान्तिमश्लोके भारवेर्लक्ष्मीशब्दप्रयोगदर्शनेनैव माघेनाऽपि श्रीशब्दप्रयोगः कृतः ।

भारविणा यमकैर्हिमालयो वर्णितः माघेनाऽपि तथैव रैवतकोऽवर्ण्यत ।

भारविः पञ्चदशे सर्गे चित्रकाव्यमुपनिबबन्ध माघोऽपि शिशुपालस्य एकोनविंशतितमेऽस्य वैशिष्ट्यमन्वकरोत ।

क्वचिच्च माघेन भारवेराशयोऽपि केवलं शब्दभेदेनैवाविकल एव समुद्धृतः ।

यथा—

कृतावधानं जितबर्हिणध्वनौ सुरक्तगोपीजनगीतनिस्वने ।
इदं जिघत्सामपहाय भूयसीं न शस्यमभ्येति मृगीकदम्बकम् ॥

भारविः ।

अस्यैव समांशो यथा—

विगतसस्यजिघत्समघट्टयत्कलमगोपवधूर्न मृगव्रजम् ।
श्रुततदीरितकोमलगीतकध्वनिमिषेऽनिमिषेक्षणमग्रतः ॥

माघः ।

"निरास्पदं प्रश्नकुतूहलित्वमस्मास्वधीनं किमु निस्पृहाणाम् ।
तथापि कल्याणकरीं गिरं ते मां श्रोतुमिच्छा मुखरीकरोति ॥"

भारविः

अस्य समांशो यथा—

"विलोकनेनैव तवामुना मुने कृतः कृतार्थोऽस्मि निबर्हितांहसा ।
तथापि शुश्रूषुरहं गरीयसीर्गिरोऽथवा श्रेयसि केन तृप्यते ॥"

माघः ।

"श्रियं विकर्षत्यपहन्त्यघानि श्रेयः परिस्नौति तनोति कीर्तिम् ।
संदर्शनं लोकगुरोरमोघं तवात्मयोनेरिव किं न धत्ते ॥"

भारविः

अस्य समांशो यथा—

"हरत्यघं सम्प्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥"

माघः ।

कुहचित्कालिदासीयकुमारसम्भवगतपद्यान्यप्यनुकरोत्ययमित्यनुमीयते यदनेन कुमारसम्भवमपि सम्यगालोच्यैतत्प्रारभ्यत ।

तद्यथा—

"तते भुजङ्गाधिपतेः फणाग्रैरधः कथञ्चिद्धृतभूमिभागः ।
शनैः कृतप्राणविमुक्तिरीशः पर्य्यङ्कबन्धं निबिडं बिभेद ।"

कुमार ३—५७

समांशो यथा—

"अथ प्रयत्नोन्नमितानमत्फणैर्धृते कथञ्चित्फणिनां गणैरधः ।
न्यधायिषातामभिदेवकीसुतं सुतेन धातुश्चरणौ भुवस्तले ॥"

माघः ।

पुनः—

"भवत्सम्भावनोत्थाय परितोषाय मूर्च्छते ।
अपि व्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे ॥"

कुमार ६—५९

अस्यैव समांशः—

"युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत ।
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः ।"

माघः ।

पुनरपि—

"योगिनो यं विचिन्वन्ति क्षेत्राभ्यन्तरवर्तिनम् ।
अनावृत्तिभयं यस्य पदमाहुर्मनीषिणः ॥"

कुमार ६—७७

समांशो यथा—

"उदासितारं निगृहीतमानसैर्गृहीतमध्यात्मदृशा कथञ्चन ।
वहिर्विकारं प्रकृतेः पृथग्विदुः पुरातनं त्वां पुरुषं पुराविदः ॥"

माघः १—३३

शास्त्रान्तरम् ज्ञानम्

शास्त्रान्तरेष्वपि प्रौढ़त्वमतितरामासीदस्य तत्र च दिङ्मात्रमुदाहृयते—

"उदासितारं निगृहीतमानसैर्गृहीतमध्यात्मदृशा कथञ्चन ।
वहिर्विकारं प्रकृतेः पृथग्विदुः पुरातनं त्वां पुरुषं पुराविदः ॥"

अत्र के वा विकाराः, का वा प्रकृतिः, तेभ्य उदासीनः पुरुषश्च कः, का च अध्यात्मदृष्टिः इत्याद्यशेषं साङ्ख्यमतमेवानेनावर्णयत "

" वर्जयन्त्या जनैः सङ्गमेकान्तत–
स्तर्कयन्त्या सुखं सङ्गमे कान्ततः।
योषयैष स्मरासन्नतापाङ्गया
सेव्यतेऽनेकया सन्नतापाङ्गया॥ " ४–४२

"अप्रसन्नमपराद्धरि पत्यौ कोपदीप्तमुररीकृतधैर्यम्
क्षालितं नु शमितं नु वधूनां द्रावितं नु हृदयं मधुवारैः॥" १०–२४

"उत्तरीयविनयात्त्रपमाणा रुन्धती किल तदीक्षणमार्गम्।
आवरिष्ट विकटेन विवोढुर्वक्षसैव कुचमण्डलमन्या॥" १०–४२

"अंशुकं हृतवता तनुबाहुस्वस्तिकापिहितमुग्धकुचाग्रा।
भिन्नशङ्खवलयं परिणेत्रा पर्यरम्भि रभसादचिरोढा॥" १०–४३

"पीडिते पुर उरः प्रतिपेषं भर्तरि स्तनयुगेन युवत्याः।
स्पष्टमेव दलतः प्रतिनार्यास्तन्मयत्वमभवद्धृदयस्य॥" १०–४६

"दीपितस्मरमुरस्युपपीडं वल्लभे घनमभिष्वजमाने।
वक्रतां न ययतुः कुचकुम्भौ सुभ्रुवः कठिनतातिशयेन॥" १०–४८

"ह्रीभरादवनतं परिरम्भे रागवानवटुजेष्ववकृष्य।
अर्पितोष्ठदलमाननपद्मं योषितो मुकुलिताक्षमधासीत्॥' १०–५२

"केनचिन्मधुरमुल्बणरागं बाष्पतप्तमधिकं विरहेषु।
ओष्ठपल्लवमपास्य मुहूर्तं सुभ्रुवः सरसमक्षि चुचुम्बे॥" १०–५४

इत्यादिभिः पद्यैः कामशास्त्रेष्वपि लोकोत्तरम्पाण्डित्यमस्य स्फुटीभवत्येव।

" सर्वकर्मशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम्।
सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम्॥ "

अत्रच विषयप्रपञ्चो रूपस्कन्धः, तज्ज्ञानप्रपञ्चो वेदनास्कन्धः, आलयविज्ञानसन्तानो विज्ञानस्कन्धः, नामप्रपञ्चः संज्ञास्कन्धः, वासनाप्रपञ्चः संस्कारस्कन्धः, एवं पञ्चधा परिवर्तमानो ज्ञानसन्तान एवात्मेति स्कन्धपञ्चकातिरिक्तः कश्चन भिन्न आत्मा नास्तीति बौद्धा यथाऽङ्गीकुर्वते तथैव राज्ञामपि "सहायाः साधनोपाया विभागो देशकालयोः विपत्तेश्च प्रतीकारः" इत्यङ्गपञ्चकातिरिक्तः कश्चिन्मन्त्रो नास्तीति प्रतिपादयता बौद्धमतरहस्यमपि सम्यग्व्याख्यातम्।

"रणद्भिराघट्टनया नभस्वतः पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः ।
स्फुटीभवद्ग्रामविशेषमूर्च्छनामवेक्षमाणं महतीं मुहुर्मुहुः ॥"

अत्र महाकविना माघेन सङ्गीतशास्त्रस्याऽपि विशदः परिचयो दत्तः । व्याख्यातमपीदम्पद्यमतिविस्तरेण श्रीमता मल्लिनाथेन । अत्र च मूर्च्छना, ग्रामः, श्रुतिः, इत्यादयः प्रयुक्ताः पारिभाषिकाः शब्दा अस्य सङ्गीतशास्त्रेऽपि निरतिशयस्प्रावीण्यम्प्रकाशयन्ति ।

व्याकरणेऽपि एक एवासीद्भगवान्माघः । नाद्यावधि कोऽप्यस्य व्याकरणशास्त्रम् तुलामधिरुरोह । नैतादृशं व्याकरणज्ञानं, संस्कृत-साहित्य-शब्दसागर-ज्ञानञ्चान्येषु कविषु निरीक्ष्यते ।
अयमेवाशयोमनसि निधायोक्तञ्च केनचिद्विदुषा :—

"नवसर्गगते माघे नवशब्दो न विद्यते ।" इति ।

अयं शब्दशास्त्रस्य मर्मज्ञकोटिकः प्रगाढः पण्डित आसीदित्यनुपदमस्योद्धृतपद्यैरेव स्फुटीभविष्यति । अयञ्च नीरसानामपि व्याकरण-शब्दानामुपयोगं कुर्वन् कवितायां लोकोत्तरं रामणीयकमुदपादयदिति हर्षनिर्भरस्वान्ताः सर्व एव काव्य-रसिका अहरहः शिरांसि घूर्णयन्त्येव ।

तथाच :—

निजौजसोज्जासयितुं जगद्द्रुहामुपाजिहीथा न महीतलं यदि ।
समाहितैरप्यनिरूपितस्ततः पदं दृशः स्याः कथमीश ? मादृशाम् ॥

उपप्लुतं पातुमदो मदोद्धतैस्त्वमेव विश्वम्भर ! विश्वमीशिषे ।
ऋते रवेः क्षालयितुं क्षमेत कः क्षपातमस्काण्डमलीमसं नभः ॥

सटाच्छटाभिन्नघनेन बिभ्रता नृसिंह ! सैंहीमतनुं तनुं त्वया ।
स मुग्धकान्तास्तनसङ्गभङ्गुरैरुरोविदारं प्रतिचस्करे नखैः ॥

पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः ।
विगृह्य चक्रे नमुचिद्विषा वली य इत्थमस्वास्थ्यमहर्दिवं दिवः ॥

अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना ।
शब्दविद्येव नो भाति राजनीतिरपस्पशा ॥

एतेषु प्रौढपरिष्कृता कविता नितरां मार्मिकत्वं सूचयति महाकवेः ।

चतुर्थश्लोकं तु लकारार्थप्रक्रियायामुदाहरणरूपेणोदाहरन् वैयाकरणकर्णधारो भट्टोजीदीक्षितोऽप्यस्य शाब्दिकपाण्डित्यस्या-तलस्पर्शितामुररीकरोत्येव ।

अस्य वर्णनाप्रकारः कियानुच्चतर आसीदिति तु अस्य कृतेः सम्यगवलोकनेनैवाधिगन्तुं शक्यते। तथाहि :—

चतुर्थे रैवतकवर्णनं, सप्तमे वन-विहार-लीला-वर्णनं, अष्टमे जल-क्रीड़ा-वर्णनं, दशमे मधुपान-मदानुभाव-आलिङ्गन-चुम्बन-विभ्रमवि-हारादि-वर्णनं, पञ्चदशे-शिशुपालस्य तत्पक्षगतमहीपतीनाञ्च क्षोभ-वर्णनं, युद्धाय कृतनिश्चयानां भटानां तन्नारीणाञ्च चेष्टावर्णनं, एकोनविंशे चित्रकाव्यवर्णनञ्च दर्शं दर्शम्प्रत्यक्षमिवानुभूयमानाममन्दा-मानन्दलीलां लभन्ते विविध-विधकाव्यरसरसिकानां सहृदयानां-मानसानि।

कथञ्च काव्य-प्रणयन पद्धतिः

अस्य च काव्य-प्रणयन-प्रणाली कीदृशी? अर्थगाम्भीर्यं, उपमा, पदलालित्यञ्च कथमिति संक्षेपतोऽपि वक्तु-मसुशकम्। किमन्यदयं महाकविः स्वकृति-नैव सर्वानपि प्राक्तनकवीनतिशय्य संमलङ्करोति भारतभुवमिति मुक्तकण्ठेन वक्तुं शक्नुमः।

अत्र विषये च उद्गिरन्त्येव प्रायो विद्वांसः—

"माघे सन्ति त्रयो गुणाः"

"माघेन विघ्नितोत्साहा नोत्सहन्ते पदक्रमे"
"मुरारिपदचिन्ता चेत्तदा माघे रतिं कुरु"
"तावद्भा भारवेर्भाति यावन्माघस्य नोदयः"
"माघेनैव च माघेन कम्पः कस्य न जायते"

"पुष्पेषु जाती, नगरीषु काशी, नारीषु रम्भा, पुरुषेषु विष्णुः।
नदीषु गङ्गा, नृपतौ च रामः, काव्येषु माघः कविकालिदासः॥"।

दृश्यते चान्यदपि प्राक्चरितस्यास्य सुचरितस्य फलं यदन्येषां महाकवीनां निबन्धाः स्व-स्वनाम्ना प्रसिद्धिमासाद्यन्त परमस्य कृति-रस्यैव नाम्ना ख्यातिमलभत—

यतः शिशुपाल-वध इति वक्तव्ये प्रायः सर्वेऽप्याबालवृद्धा-"माघ" इत्येवोदीरयन्ति न खलु कश्चिच्छिशुपालवध इति वदतीति स्फुटमेव दरीदृश्यते।

इयमप्यस्य कृतिः कालिदासादिमहाकवि-निबद्धानां रघुवंशादिमहाकाव्यानां गणनासु सादरं समलङ्करणार्हेत्यत्र न खलु साहित्य-सरःसुधास्वाद-विकसित-स्वान्तकैरवस्य साहित्यिकस्य कस्यचिद्विदुषो विमतिरितिमन्ये ।

प्रसन्नार्थगम्भीरं, रूपकोपमोत्प्रेक्षार्थान्तरन्यासादिभिरर्थालङ्कारै-
कं वाऽऽरभ्य प्रणीतमेत- र्यमकानुप्रासचित्रबन्धादिभिश्च शब्दालङ्कारै-
न्महाकाव्यम् रतिमात्रमलङ्कृतमाकरोक्तकाव्यगुणगणैरशेष-
मिदं सुप्रसिद्धं शिशुपालवधमहाकाव्यं महायशसा माघेन श्रीमद्भागवतीयदशमस्कन्धान्तर्गत– चतुःसप्ततिमिताध्यायगत–धर्मराज–युधिष्ठिरानुष्ठित-राजसूय-यज्ञभवं वृत्तविशेषमवलम्ब्य स्वातन्त्र्येण विरचितम् । अत्र च :—

द्वारिकायां नारदमुनेरागमः, श्रीकृष्णं प्रति इन्द्रसन्देशः, उद्धवबलदेवश्रीकृष्णानां मन्त्रणा, द्वारिकान्तः श्रीकृष्णस्य प्रस्थानम्, रैवतकपर्वतवर्णनम्, स्कन्धावार-ऋतु-पुष्पावचय-जलक्रीड़ा वर्णनम्, सायङ्काल-चन्द्रोदय-प्रसाधन-पानगोष्ठी-रात्रि-क्रीड़ा-प्रभातवर्णनं, पुनः प्रयाण-यमुनावर्णनं, श्रीकृष्णपाण्डवयोः समागमः, राजसूययज्ञप्रस्तावः शिशुपालस्य तत्पक्षपातिनाञ्च क्षोभः, शिशुपालदूतस्य कृष्णसभायां व्यङ्ग्येन भाषणं, कृष्णसभाक्षोभः, सेनासन्नाहः, सैन्ययोः समागमः, कृष्णशिशुपालयोरस्त्रयुद्धम्, शिशुपालवधमन्ते कविवंशश्च सम्यगुपवर्णितः ।

एतच्च शिशुपालस्य वधमधिकृत्य कृतमिति शिशुपालवधमित्यभिधीयते ।

तदिदं प्रचलितेषु पञ्चसु महाकाव्येषु प्रधानभूमिमवलम्बते । साम्प्रतं भारते सर्वास्वपि संस्कृतपरीक्षासु आङ्गलपरीक्षासु च अंशतः पूर्णतया च पाठ्यत्वेन निरधार्यत ।

अत्रत्यनायकादिपरिज्ञानाय सङ्ग्रहश्लोको यथा—

नेतास्मिन्यदुनन्दनः स भगवान्वीरः प्रधानो रसः
शृङ्गारादिभिरङ्गवान् विजयते पूर्णा पुनर्वर्णना ।
इन्द्रप्रस्थगमाद्युपायविषयश्चैद्यावसादः फलम्
धन्यो माघकविर्वयन्तु कृतिनस्तत्सूक्तिसंसेवनात् ॥



—मल्लिनाथः ।

अस्य कृतौ केवा गुणाः केच दोषाः

माघः भारवेरादर्शमूरीकृत्य तमेव कौशलं नितरामुन्नतावस्थामनैषीत् । तत एव काव्येषु यादृशी सर्वाङ्गसम्पूर्णा, प्रौढपरिष्कृता, नियमिता गभीर-मधुरा, मसृणतरा कविता माघस्य, न तादृशी काचन महाकाव्यस्य रचना दरीदृश्यते संस्कृत-साहित्ये । यद्यपि हरविजय-श्रीकण्ठचरित-विक्रमाङ्क-देव-चरित-प्रभृति-काव्यानि परमुत्कर्षं भजन्ते ; तथापि माघः खलु कमपि विचित्रतरं विशिष्टं प्रमोद-प्रवाहं प्रवाहयति सहृदयधुरीणानां चमत्कृते चेतसि । तस्य च वैशिष्ट्यस्य वैपुल्यमवलोक्य केवलं कतिपयान्येवोदाहरणानि प्रदर्श्यन्ते ।

माघमहाकवेः सरसरचनायां वहवः काव्यगुणाः, अलङ्काराश्च प्रतिपदं स्फुटमवलीयन्ते । सुदृढ-वन्धाऽपि मसृणा, सयमकाऽपि प्रसन्नस्तिमित-प्रवाहा कविता-सरणिः सर्वथा चेतश्चमत्कुरुते । प्रथमे सर्गे नारद-कृष्ण-संवादे महाकविर्नितरां सभ्यतमं महत्वपूर्णञ्च परस्परालापमालपन् प्रौढतरं काव्यप्रवाहं प्रदर्शयति ।

तद्यथाः—

स काञ्चने यत्र मुनेरनुज्ञया नवाम्बुदश्यामतनुर्न्यविक्षत ।
जिगाय जम्बूजनितश्रियः श्रियं सुमेरुशृङ्गस्य तदा तदासनम् ॥

अत्र उपमानुप्रासयोः संसृष्टिः, पदानाञ्च लालित्यं सहृदयहृदयमाकर्षति ।

रथाङ्गपाणेः पटलेन रोचिषामृषित्विषः संवलिता विरेजिरे ।
चलत्पलाशान्तरगोचरास्तरोस्तुषारमूर्तेरिव नक्तमंशवः ।

प्रफुल्लतापिच्छनिभैरभीषुभिः शुभैश्च सप्तच्छदपांसुपाण्डुभिः ।
परस्परेणच्छुरितामलच्छवी तदैकवर्णाविव तौ वभूवतुः ॥

नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम् ।
मृदुलतान्तलतान्तमलोकयत्स सुरभिं सुरभिं सुमनोभरैः ॥

अत्र लोकोत्तरं पदविन्यासप्रदर्शनपुरःसरमुपमावैचित्र्यं, तृतीयश्लोके च प्रतिपादं प्रथमाक्षरद्वयात्परतोऽक्षरत्रयावृत्तिरूपयमकवैचित्र्यञ्चातिशयमानन्दसन्दोहं जनयन्नस्य कवितायां रस-भावशब्दार्थालङ्काराणाम्प्राचुर्यम्प्रख्यापयत्येव ।

अस्य कृतौ दोषा बहुशोऽन्विष्यमाणा अपि केवलं ऋतुवर्णन-प्रस्तावे यत्र कुत्रचन पुनरुक्तिरूपा अवलोक्यन्ते परमिदानीं ते मया "निमज्जतीन्दोः किरणेष्विवाङ्कः" इति नीतिमनुसृत्योपेक्ष्यन्ते। समालोचनावसरेऽस्य गुणदोषौ सम्यग्विभावयिष्यामः ।

अन्यापि काचिदस्ति नवा कृतिप्रवृत्तिः

शिशुपालवधादन्यः कोऽपि ग्रन्थोऽस्य कवेर्नोपलभ्यते परं सुभाषितावलौ, औचित्यविचारचर्चायाञ्च वल्लभदेवेन क्षेमेन्द्रेण च शिशुपालवधेऽनुपलभ्यमाना माघनाम्ना समुदाहृता अधस्तनाः श्लोका दृश्यन्ते, अतोऽनुमीयते यदन्योऽपि कश्चन ग्रन्थोऽस्य महाकवेर्विरचितोऽस्मद्दौर्भाग्यादिदानीमनुपलभ्यमान एवास्ते ।

ते च श्लोका यथा :—

"शीलं शैलतटात्पतत्वभिजनः सन्दह्यतां वन्हिना
माश्रौषं जगति श्रुतस्य विफलक्लेशस्य नामाऽप्यहम् ॥
शौर्यं वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु मे सर्वदा
येनैकेन विना गुणास्तृणबुसप्रायाः समस्ता अमी ॥"

अयमेव भर्तृहरिनीतिशतकेऽप्युद्धृतः :—

"नारी नितम्बफलके प्रतिबध्यमाना
हंसीव हेमरशना मधुरं ररास ।
तन्मोचनार्थमिव नूपुरराजहंसा—
श्चक्रन्दुरार्तमुखरे चरणावलग्नाः ।

सुभाषितावलिः ।

"बुभुक्षितैर्व्याकरणं न भुज्यते
पिपासितैः काव्यरसो न पीयते
न विद्यया केनचिदुद्धृतं कुलं
हिरण्यमेवार्जय निष्फलाः कलाः"

—औचित्यविचारचर्चा

इमे च श्लोकाः स्फुटा एवेति प्रतीयते।

एवं माघ—विषये यत्किमपि वक्तव्यं तत्समाप्तप्रायमेव। शिशुपाल वध—विषये यद्वक्तव्यं तत्पुनः स्वतन्त्रे प्रबन्धे निवेदयिष्यामः।

मन्ये सुपरिचितैरैतिहासिकैः प्रमाणैर्निबद्धोऽयं निबन्धः, नूनं किमपि कौतूहलं जनयेत सहृदयानां चेतसि। अत्र यत्किञ्चिदपि प्रमाणे-विकलं न्यूनं वाभवेत्तदवश्यमेव सहृदयैर्विद्वद्भिः सूचनीयम्, येन तस्य सम्यगुपयोगः स्यात्। किम्बहुना—

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः॥

दीपमालिका १९८३
शारदा—भवनम्
काशी

भवदीयो
गौरीनाथपाठकः।



Printed by Rameshwar Pathak,
at the Tara Printing Works, Benares City.

